(८) घर्मः, अश्विनौ।

[ ६७९ ] ( अथर्व० ७।७३।१-[illegible] )

१,४ जगती, २ पथ्याबृहती, ३, ५, ६ त्रिष्टुप्।

६७९. समिद्धो अग्निर्वृषणा रथी दिवस्तप्तो घर्मो दुह्यते वामिषे मधु। वयं हि वां पुरुदमासो अश्विना हवामहे सधमादेषु कारवः ॥१॥

६७९ सम्ऽइद्धः। अग्निः। वृषणा। रथी। दिवः।
तप्तः। घर्मः। दुह्यते। वाम्। इषे। मधु॥
वयम्। हि। वाम्। पुरुऽदमासः।
अश्विना। हवामहे। सधऽमादेषु। कारवः ॥१॥

६७९ अन्वयः— वृषणौ अश्विनौ! दिवः रथी अग्निः समिद्धः, घर्मः तप्तः, वां इषे मधु दुह्यते, वयं पुरुदमासः कारवः सध-मादेषु वां हवामहे ॥ १ ॥

६७९ अर्थ— हे ( वृषणौ अश्विनौ ) बलवान् अश्विदेवो! ( दिवः रथी अग्निः समिद्धः ) प्रकाशका रथ जैसा अग्नि प्रदीप्त हुआ है। ( घर्मः तप्तः ) यह पात्र उष्ण हुआ है। ( वां इषे मधु दुह्यते ) आपके यज्ञके लिये मधुर रस निकाला जा रहा है ( वयं पुरुदमासः कारवः ) हम सब बहुत घरवाले कुशलतासे कर्म करनेवाले लोग ( सध-मादेषु वां हवामहे ) साथ साथ रसपान करनेके समय आप दोनोंको बुलाते हैं॥

[ ६८० ]

६८० समिद्धो अग्निरश्विना तप्तो वां घर्म आ गतम्। दुह्यन्ते नूनं वृषणेह धेनवो दस्रा मदन्ति वेधसः ॥२॥

६८० सम्ऽइद्धः। अग्निः। अश्विना।
तप्तः। वाम्। घर्मः। आ। गतम्॥
दुह्यन्ते। नूनम्। वृषणा। इह।
धेनवः। दस्रा। मदन्ति। वेधसः ॥२॥

६८० अन्वयः— वृषणा अश्विना! अग्निः अजीगः, वां घर्मः तप्तः आ गतं, नूनं इह धेनवः दुह्यन्ते, दस्रा! वेधसः मदन्ति ॥ २ ॥

६८० अर्थ— हे ( वृषणा अश्विना ) बलवान् अश्विदेवो ! ( अग्निः अजीगः ) अग्नि प्रदीप्त हुआ है, ( वां घर्मः तप्तः ) आपके लिये यह घर्मका पात्र तप गया है। इसलिये ( आ गतं ) आओ। ( नूनं इह धेनवः दुह्यन्ते ) निश्चयसे यहां गायें दुही जाती हैं। हे ( दस्रा ) दर्शनीय देवो ! ( वेधसः मदन्ति ) ज्ञानपूर्वक कर्म करनेवाले ही आनंद प्राप्त करते हैं ॥

[ ६८१ ]

६८१ स्वाहाकृतः शुचिर्देवेषु यज्ञो यो अश्विनोश्चमसो देवपानः ।
तमु विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना
रिहन्ति ॥३॥

६८१ स्वाहाऽकृतः । शुचिः । देवेषु । यज्ञः ।
यः । अश्विनोः । चमसः । देवऽपानः ॥
तम् । ऊं इति । विश्वे । अमृतासः । जुषाणाः ।
गन्धर्वस्य । प्रति । आस्ना । रिहन्ति ॥३॥

६८१ अन्वयः— यः अश्विनोः देवपानः चमसः देवेषु स्वाहाकृतः शुचिः, विश्वे अमृतासः तं उ जुषाणाः (तं उ) गन्धर्वस्य आस्ना प्रति रिहन्ति ॥ ३ ॥

६८१ अर्थ— ( यः अश्विनोः देवपानः चमसः ) जो अश्विदेवोंका देवोंको रसपान करानेवाला चमस है, वह ( देवेषु स्वाहाकृतः शुचिः ) देवोंके लिये अर्पण होनेके कारण पवित्र है। ( विश्वे अमृतासः तं उ जुषाणाः ) सब देव उसीका सेवन करते हैं। और ( तं उ गंधर्वस्य आस्ना प्रति रिहन्ति ) उसकी गंधर्वके मुखसे प्रशंसा करते हैं ॥

[ ६८२ ]

६८२ यदुस्रियास्वाहुतं घृतं पयोऽयं स वामश्विना भाग आ
गतम् । माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं
रोचने दिवः ॥४॥

६८२ यत् । उस्रियासु । आऽहुतम् । घृतम् । पयः ।
अयम् । सः । वाम् । अश्विना । भागः । आ । गतम् ॥
माध्वी इति । धर्तारा । विदथस्य ।
सत्पती इति सत्ऽपती । तप्तम् । घर्मम् । पिबतम् ।
रोचने । दिवः ॥४॥

६८२ अन्वयः— अश्विनौ ! यत् उस्रियासु आहुतं घृतं पयः अयं सः वां भागः आ गतं; माध्वी विदथस्य धर्तारौ सत्पती ! दिवः रोचने तप्तं घर्मं पिबतम् ॥ ४ ॥

६८२ अर्थ— हे ( अश्विनौ ) अश्विदेवो ! ( यत् उस्रियासु आहुतं घृतं पयः ) जो गौओंमें रखा हुआ घी और दूध है, ( अयं स वां भागः ) यह तो आपकाही भाग है, इसके लिये तुम दोनों ( आ गतं ) आओ । हे ( माध्वी विदथस्य धर्तारौ सत्पती ) मधुर रसका प्रेम करनेवाले, युद्धमें आधार देनेवाले उत्तम स्वामी ! ( दिवः रोचने तप्तं घर्मं पिबतं ) प्रकाशके होनेपर तपे दूधको पीओ ॥

[ ६८३ ]

६८३ तप्तो वां घर्मो नक्षतु स्वहोता प्र वामध्वर्युश्चरतु पयस्वान् ।
मधोर्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्रियायाः ॥

६८३ तप्तः । वाम् । घर्मः । नक्षतु । स्वऽहोता ।
प्र । वाम् । अध्वर्युः । चरतु । पयस्वान् ॥
मधोः । दुग्धस्य । अश्विना । तनायाः ।
वीतम् । पातम् । पयसः । उस्रियायाः ॥५॥

६८३ अन्वयः—अश्विनौ ! तप्तः घर्मः वां नक्षतु, स्वहोता पयस्वान् अध्वर्युः वां प्र चरतु; तनायाः उस्रियायाः मधोः दुग्धस्य पयसः वीतं पातम् ॥ ५ ॥

६८३ अर्थ—हे ( अश्विनौ ) अश्विदेवो ! (तप्तः घर्मः वां नक्षतु) तपे दूधको तुम दोनों प्राप्त करो ! ( स्व होता पयस्वान् अध्वर्युः वां प्र चरतु) स्वयं हवन करनेवाला दूध लेकर आया अध्वर्यु आप दोनोंकी सेवा करे ! ( तनायाः उस्रियायाः मधोः दुग्धस्य पयसः ) हृष्टपुष्ट गौके मधुर दूधको ( वीतं पातं ) प्राप्त करके पी डालो ॥

६८४ हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात्।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय

६८४ हिङ्ऽकृण्वती । वसुऽपत्नी । वसूनाम् ।
वत्सम् । इच्छन्ती । मनसा । अभिऽआगात् ॥
दुहाम् । अश्विऽभ्याम् । पयः । अघ्न्या ।
इयम् । सा । वर्धताम् । महते । सौभगाय ॥८॥

६८४ अन्वयः — हिङ्कृण्वती वसूनां वसुपत्नी मनसा वत्सं इच्छन्ती अभ्यागात्; इयं अघ्न्या अश्विभ्यां पयः दुहां, सा महते सौभगाय वर्धताम् ॥ ८ ॥

६८४ अर्थ- ( हिङ्कृण्वती वसुपत्नी वसूनां ) हिंकार करनेवाली वसुओंको दूध पिलानेवाली, ( मनसा वत्सं इच्छन्ती अभ्यागात् ) मनसे अपने बछडेको मिलनेकी इच्छा करती हुई पास आगई है। (इयं अघ्न्या अश्विभ्यां पयः दुहां) यह अवध्य गौ अश्विदेवोंके लिये दूध देवे, और (सा महते सौभगाय वर्धतां) वह बडे ऐश्वर्यका संवर्धन करनेके लिये बढे ॥

## (९) मधु, अश्विनौ ।

[ ६८५ ] ( अथर्व. ९।१।११,१६-१७,१९. )

अनुष्टुप्, १७ उपरिष्टाद्बृहती ।

६८५ यथा सोमः प्रातःसवने अश्विनोर्भवति प्रियः ।
एवा मे अश्विना वर्च आत्मनि ध्रियताम् ॥११॥

६८५ यथा । सोमः । प्रातःऽसवने ।
अश्विनोः । भवति । प्रियः ॥
एव । मे । अश्विना । वर्चः ।
आत्मनि । ध्रियताम् ॥११॥

६८५ अन्वयः— यथा सोमः प्रातःसवने अश्विनोः प्रियः भवति, अश्विना ! एवा मे आत्मनि वर्चः ध्रियताम् ॥ ११ ॥

६८५ अर्थ- ( यथा सोमः प्रातःसवने ) जैसा सोमरस प्रातःसवन यज्ञमें (अश्विनोः प्रियः भवति) अश्विदेवोंको प्रिय होता है, हे (अश्विना) अश्विदेवो! ( एवा मे आत्मनि ) वैसा मेरी आत्मामें ( वर्चः ध्रियतां) तेजका धारण करो ॥

[ ६८६ ]

६८६ यथा मधु मधुकृतः संभरन्ति मधावधि ।
एवा मे अश्विना वर्च आत्मनि ध्रियताम् ॥१६॥

६८६ यथा । मधु । मधुऽकृतः ।
सम्ऽभरन्ति । मधौ । अधि ॥
एव । मे । अश्विना । वर्चः ।
आत्मनि । ध्रियताम् ॥१६॥

६८६ अन्वयः— यथा मधुकृतः मधौ अधि मधु संभरन्ति, अश्विना ! एवा मे वर्चः तेजः बलं ओजः ध्रियताम् ॥ १६ ॥

६८६ अर्थ– ( यथा मधुकृतः ) जैसी मधुमक्खियाँ ( मधौ अधि मधु संभरन्ति ) मधुकोशमें मधुको संचित करती हैं, हे ( अश्विना ) अश्विदेवों ! ( एवा मे ) ऐसा मेरेलिये ( वर्चः तेजः बलं ओजः ध्रियतां ) प्रभाव, तेज, बल और सामर्थ्य धारण करें ॥

[ ६८७ ]

६८७ यथा मक्षा इदं मधु न्यञ्जन्ति मधावधि ।
एवा मे अश्विना वर्चस्तेजो बलमोजश्च ध्रियताम् ॥१७॥

६८७ यथा । मक्षाः । इदम् । मधु ।
निऽअञ्जन्ति । मधौ । अधि ॥
एव । मे । अश्विना । वर्चः ।
तेजः । बलम् । ओजः । च । ध्रियताम् ॥१७॥

६८७ अन्वयः— यथा मक्षाः इदं मधु मधौ अधि न्यञ्जन्ति एवा अश्विनौ ! मे वर्चः तेजः बलं ओजः ध्रियताम् ॥ १७ ॥

६८७ अर्थ— ( यथा मक्षाः ) जैसी मक्खियाँ ( इदं मधु ) यह मधु ( मधौ अधि न्यञ्जन्ति ) मधुके कोशमें भर देते हैं, ( एवा ) इस तरह हे (अश्विनौ) अश्विदेवों ! ( मे वर्चः तेजः बलं ओजः ध्रियतां ) मेरेमें प्रभाव, तेज और सामर्थ्य धारण करो ॥

६८८ अश्विना सारघेण मा मधुनाऽङ्क्तं शुभस्पती ।
यथा वर्चस्वतीं वाचमावदानि जनाँ अनु ॥१९॥

६८८ अश्विना । सारघेण । मा ।
मधुना । अङ्क्तम् । शुभः । पती इति ॥
यथा । वर्चस्वतीम् । वाचम् ।
आऽवदानि । जनान् । अनु ॥१९॥

६८८ अन्वयः– शुभस्पती अश्विनौ ! सारघेण मधुना मा मां अङ्क्तं, यथा वर्चस्वतीं वाचं जनान् अनु आवदानि ॥ १९ ॥

६८८ अर्थ– हे ( शुभस्पती अश्विनौ ) शुभके पालक अश्विदेवों ! ( सारघेण मधुना मा मे अङ्क्तं ) सारघरूप मधुसे मुझे युक्त करो । ( यथा वर्चस्वतीं वाचं ) जैसा तेजस्वी भाषण ( जनान् अनु आवदानि ) लोगोंके प्रति मैं बोल सकूं वैसा मेरा मीठा भाषण करो ॥

## (१०) सिनीवालीसरस्वत्यश्विनः ।

[ ६८९ ] ( ऋ. १०।१८४।२ )

(६८९) त्वष्टा गर्भकर्ता, विष्णुर्वा प्राजापत्यः । अनुष्टुप् ।

६८९ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥२॥

६८९ गर्भम् । धेहि । सिनीवालि ।
गर्भम् । धेहि । सरस्वति ॥
गर्भम् । ते । अश्विनौ । देवौ ।
आ । धत्ताम् । पुष्करऽस्रजा ॥२॥

६८९ अन्वयः– सिनीवालि ! गर्भं धेहि, सरस्वति ! गर्भं धेहि, पुष्करस्रजा अश्विनौ देवौ ते गर्भं आ धत्ताम् ॥ २ ॥

६८९ अर्थ– हे ( सिनीवालि ) सिनीवाली ! ( गर्भं धेहि ) गर्भका धारण करो । हे ( सरस्वति ) सरस्वति ( गर्भं धेहि ) गर्भका धारण करो । हे ( पुष्करस्रजा अश्विनौ देवौ ) कमलोंकी माला धारण करनेवाले अश्विदेवों ! ( ते गर्भं आ धत्तां ) तेरे गर्भका धारण करो ॥

